सर्वप्रयाणकालेषु कुणपस्य च दर्शनम् । आभिमुख्याभिगमनं चतुर्भिर्वाहकैस्सहः ॥
साक्षात्पुरन्दरस्यापि दुर्लभस्तत्प्रकीर्तितम् । अत्यन्तस्वगृहस्याराद्वामाद्दक्षिणतो यदि ॥
बलिभुग्गमनं शस्तं सर्वकार्यैकसाधकम् । नारायणमहापक्षिगमनं चेत्तथा पुनः ।
सर्वप्रयाणकालेषु जातं तत्कार्यमित्यपि । विज्ञेयमेव सुव्यक्तं चाञ्चल्यं तत्र वर्जयेत् ॥
कार्यार्थं भाषमाणेषु तदा यद्यवशात्पुनः । अश्वप्लुतं भवेद्रम्यं तत्कार्यं वृद्धिरुच्यते ॥

सद्यः सिद्धिश्च कथिता सुराणामपि तादृशम् ।
निमित्तं दुर्लभं शस्तं नराणां किं पुनः स्मृतम् ॥

तत्तकार्यैकवाक्येषु चलत्स्वेकत्र चेत्तदा । लौकिकं वा वैदिकं वा वाक्यं तद्धृदयंगमम् ॥
तदानुकूल्यैकरूपसाधकं तच्छ्रुतं यदि । तत्कार्यं च ततः पश्चात्कालेनाल्पेन सिध्यति ॥
संदिग्धशुभकार्याणां चिन्तनेऽत्रतिसंशयात् । कर्तव्यत्वाकर्तव्यत्वद्वयेनैवातिसंकटात् ॥
कुरु मास्त्वत्र संदेहः एवं वाक्य उदीरिते । तदा तं संशयं त्यक्त्वा तत्कार्यमतिशीघ्रतः ॥
कुर्यादेवाविचारेण तत्कार्यं तत्परं ध्रुवम् । वृद्धिं प्राप्नोति महतीं मस्मिन्नर्थे न संशयः ॥
सर्वत्र शुभकार्येषु समुद्युक्तेषु सन्ततम् । कर्तुं तदा वशाज्जातं निमित्तं शुभसूचकम् ॥
शुभकार्यकरं स्याद्धि रोगोपद्रवचिन्तने । राजचोरारिचिन्तानु तदा सद्यः समुत्थितम्
घण्टाशब्दः शंखशब्दः वेणुवीणादिसुस्वरः । तूर्यशब्दो गीतशब्दो तालस्वस्तिकवैणवाः
भेरीमृदङ्गपणवढक्काडिण्डिमसंभवः । सर्वे शब्दाः किं बहुना शुभत्वेन निरूपिताः ॥
ते सर्वे स्युः पृथक्त्वेन सद्यः प्राणहराः स्मृताः । रोगादिचिन्तने तर्हि चौषधादिपरिग्रहे
क्षुतमास्यध्वतिर्मास्तु ध्वनिदुर्लक्षणादिकः । तच्छामकः प्रकथितः सद्य एव न चापरः ॥

एवमेवाशुभानां च कार्याणां संततं स्मृतम् ॥

## दुष्टनिमित्तानि

प्रयाणादिषु सर्वेषु दुर्निमित्तानि केवलम् । प्रशस्यन्ते विशेषेण न स्युस्तत्र शुभानि वै ॥
यानि दुष्टनिमित्तानि रोगपीडादिकर्मसु । तानि सन्ति प्रशस्तानि सर्वदा नात्र संशयः ॥
काकवद्यदि मार्जालः(रः)प्रयाणेषु गतो भवेत् । स समीचीन इत्युक्तः विपरीतोऽन्यथा स्मृतः

दर्शनं सर्वकार्येषु मार्जारस्यातिगर्हितम् । अथाऽपि केचिन्मार्गस्य मध्ये गच्छन् प्रदृश्यते
यद्ययं काकवद्भूयः समीचीनस्मृतस्त्वति । प्रोचुर्महर्षयो देवास्तादृक् तद्गमनं पुनः ॥
दुर्लभं वासवस्यापि तस्य साक्षाच्छचीपतेः । तिलधातुकवाय्वाशि शशिकाषायिणामपि
यतीनां दर्शनं दुष्टं प्रयाणेषु निरन्तरम् । विधवानां देवतानां तत्पत्नीनां तथैव च ॥
उल्कावह्निकराणां च दर्शनं गमनेतराम् । निन्दितं सर्वशास्त्रेषु तस्मात्तत्परिवर्जयेत् ॥
सुमंगलीहस्तगतः सज्वालो वह्निरागतः । यदि दृष्टो मार्गमध्ये कल्याणशतकारकः ॥
विधवाहस्तगस्सोऽयं तादृशोऽपि प्रदूष्यते । पतिपुत्रविहीना या विधवा सा प्रकीर्तिता

पतिमात्रविहीना या सपुत्रा चेन्न दूष्यति ।
सुवासिनीसमा सापि सा दृष्ट्वा यदि वर्त्मनि ॥

विधवा तादृशी घोरा चाभिमुख्येन चेत्कलिः । समागता संभवेद्धि पतिपुत्रैकवर्जिता ॥
सद्य एव भवेन्नूनं रक्तकाकनिरोधतः । महामृत्युर्मनुष्यस्य तस्मात्तत्परमेव वै ॥
गमनाय पदं त्वेकवदं(पदं)त्रास्मिन्क्षिपेन्न तु । पादप्रसर्पणाद्घोरो रक्तवर्णस्य पापिनः ॥

काकस्य मृत्युरूपस्य रोधे रोगोऽस्य जायते ।
निरुद्धः शत्रुणां वाक्यैः मागच्छेति ततः पुनः ॥

न गच्छेद् देवि सततं श्रेयस्कामी तु पद्धतिम् । पयःकुम्भं सुराकुम्भं मधुभाण्डं तथामिषम्
मांसखण्डं दधिघटं घृतकुम्भं विशेषतः । यदि गच्छन्मार्गमध्ये संप्राप्तं देवकुम्भकम् ॥
वाद्यघोषैः परिवृतं परिवाराति सुन्दरम् । यदि पश्येत्सद्य एव कृतकार्यो भवेद्ध्रुवम् ॥
पश्चादनन्तकल्याणमंगलायतनो भवेत् । मयूरपि(च्छ)नृत्यन्तं मार्गमध्ये विलोक्य वै ॥
कार्यमुद्दिश्य गच्छन्वै कृतकृत्यः प्रजायते । आमिषं भक्षयन्तं तं गरुडं सर्पवैरिणम् ॥

नीलकण्ठं सोरगं वा बभ्रुं वा सर्पखण्डकम् ।
खादन्तं संहरन्तं वा यदि पश्येत्तु वर्त्मनि ॥

## सुनिमित्तानि

तस्य सद्यः सर्वशत्रुविनाशो जायते ध्रुवम् । विप्राशिषः कृता वर्त्ममध्ये दैवात्सदीरिताः

पतिव्रतोदिताश्चापि महच्छ्रेयो विधायकाः । पञ्जरस्थैः शुकैर्गेहे पालितैरवशोदितैः ॥
वचनैरपि कार्याणि विज्ञेयानि मनीषिभिः ।
समीचीनासमीचीना तदास्य मतिरीरितः(ता) ॥
भवेयुरेव कार्याणि नात्र कार्या विचारणा । तस्मिन्मुहूर्ते ब्रह्माख्ये स्वोत्थानसमये यदि
देवतावाचकरुतं श्रुतं मंगलवाचकम् । अत्यन्तं भावि कार्यस्य ज्ञापकं तद्भवेद्ध्रुवम् ॥
मतं तदीयं पुरतो अ(ह्य)वशादपि निर्गतम् । श्राव्यं चेदति भव्यानां ज्ञेयं दुर्गतिवारकम्
सुखश्राव्यरुताः राजभवनेषु निरन्तरम् । प्रवेश्याः पालनीयाश्च पक्षिणश्चित्रवर्णकाः ॥
गृध्रकंकबकोलूकताक्ष्र्यचेटकतुन्नकाः । जडकोटनटप्रोथप्राणिबिन्दुमरत्वराः ॥
वर्जनीयाः पालनार्थं न प्रवेश्याश्च वेश्मसु ॥

## गृध्रादीनां गृहारोहणफलम्

कपोतगृध्रोलूकानां गृहसंबन्धतः परम् । गृहिणस्तत्कलत्राणां पीडा नु महती भवेत् ।
कूर्मागमनतो गेहे यजमानो निरन्तरम् । अनिवर्त्यमहारोगैराक्रान्तो दुःखभाग्भवेत् ॥
तद्दोषपरिहाराय शौनकोक्तां सुपावनीम् ।
शान्तिं बोधायनोक्तां वा कुर्यादेवाऽविचारयन् ॥
शान्त्यां कृतायां सुमहत्सद्यःश्रेयो भवेन्न चेत् ।
प्रभवेत्तु महानर्थः तस्मान्नैमित्तिके वशात् ॥
सम्मगतेति चपलं बुद्धिमान् सुसमाहितः । यस्य प्रतिपदोक्तं यत्तदेव हि समाचरेत् ॥
तदलं बहुना तूष्णीं प्रसक्तानुप्रसक्तितः । बाडबः प्रातरुत्थाय देवानां ध्यानमाचरेत् ॥
तद्धेतुभूतमन्त्रांश्च पुराणोक्तान् वदेदपि ॥

## अपररात्रेकर्तव्यम्

स्वाध्यायनिरतश्चेत्तु तत्र निष्ठो भवेदति । नास्त्यस्त्य मन्त्रपठने चास्यावश्यकता परा ॥
तस्य तत्रैव सर्वे स्युः मन्त्रा यज्ञास्तपांसि च ।
तीर्थानि सरितश्चैव दानानि विविधानि च ॥

व्रतानि धर्मा निखिलाः कृच्छ्राणि विविधान्यपि ।
वर्तन्ते तेन तस्यास्य तद्वर्णोच्चारणेन वै ॥
सर्वसिद्धिर्भवेन्नूनं अवशात्प्रतिवर्णके ॥

## अपररात्रे वेदाध्ययननियमाः

रात्रेऽपरस्मिन् यो मोहाच्छयानोऽध्ययनं चरेत् ।
व्यालो भवेदयं नूनं यद्यशुद्धः शुनि(चि)र्भवेत् ॥
अप्रक्षाल्यानाचम्य दुष्टसर्पो भवेत्किल ।
सताम्बूलास्यतश्चेत्तु द्व्यास्यो व्यालो भवेदति ॥

विकच्छो यदि दौर्गत्यं प्रणतः प्राप्नुयादति । अकच्छो महिषत्वं तु सूतकेन शृगालताम्
अनध्यायेषु दारिद्र्यं कुष्ठरोगित्वमेव च । प्राप्नोत्येव न सन्देहः परमध्ययनात्पुनः ॥
निद्रया तत्फलं नव प्राप्नोति पुनरप्यति । उलूकत्वमवाप्नोति नष्टायुः प्रभवत्यपि ॥
वर्त्म गच्छन्यदिपुनः पिशाचत्वमवाप्नुयात् । सन्ध्ययोर्मृत्युमाप्नोति शवे निपतने यदि
क्रोष्टृत्वं समवाप्नोति वाहने संस्थितो यदि । बिडालत्वमवाप्नोति द्रुमपादस्थितो यदि
अरण्ये निर्जले क्रूरे रक्षस्त्वं समवाप्नुयात् । खट्वायां संस्थितश्चेत्तु मत्कुणत्वमियादति
रीक्षत्वं तल्पगश्चेत्तु कटस्थश्चेत्तु काकताम् । भवनोपरि चेन्नूनं कपोतत्वं तथा पुनः ॥
मण्टपोन्नतपृष्ठस्थः तार्क्ष्यत्वं प्रतिपद्यते । श्मशानादिप्रदेशेषु व्याधत्वं च पुलिन्दताम् ॥
श्राद्धभुग्यदि मृत्युत्वं प्रेतत्वं प्रेतभोजनात् । पत्नीसंयोगचपलचित्तो यदि तया पुनः ॥
समाश्लिष्टः स्वयं तां वा समाश्लिष्याथवापुनः । सूकरत्वं गार्दभत्वं श्वत्वं काकत्वमेव च
संप्राप्य कौलङ्गानित्वं ज्योतिरिंगणतां ततः । शतजन्मसु संप्राप्य चक्रवाकत्वमृच्छति ॥
तस्मात्तु वेदाऽध्ययनं अत्यन्तनियमान्वितः । कुर्वीतैव विधानेन सुमहद्बाधकं न चेत् ॥
अकृताध्ययनश्चेत्तु सर्वकार्येषु सन्ततम् । तत्पुराणोक्तमन्त्रान्वा नान्तरीकेषु केवलम् ॥
प्रवदेदेव तूष्णीकं न तु मान्त्रिककर्मणि । तत्रादौ शयनाद्बाह्ये संस्थितो भूतले पुमान्
इमं मन्त्रं जपेद्भक्त्या जपस्स च कृताकृतः ॥

## पुण्यश्लोकाः

तमिमं वः प्रवक्ष्यामि पुण्यं मन्त्रं च तादृशम् । नान्तरीकेषु कालेषु यूयं जपत च द्विजाः

ब्रह्मा मुरादि(रि)स्त्रिपुरान्तकश्च भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनिराहुकेतवः कुर्वन्तु सर्वे मम सुप्रभातम् ॥

इमंमन्त्रां समुच्चार्य पश्चात् खलु समाहितः ।
पुण्यश्लोकान् कीर्तयेच्च पुण्यश्लोकाश्च ते स्मृताः ॥

नलादय इतिख्याताः तत्कीर्तनमहामनुम् । सम्यङ्निरूपयिष्यामि हिताय जगतामहम्

पुण्यश्लोको नलोराजा पुण्यश्लोको युधिष्ठिरः ।
पुण्यश्लोका च वैदेही पुण्यश्लोकः पुरूरवाः ॥ ॥

कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम्
तत्रादौ संप्रवक्ष्यामि कार्कोटकहरेः परम् । असाधारणतो ज्ञेयं कीर्तनं कलिनाशनम् ॥
नलस्य दमयन्त्याश्च विशेषेग निरूप्यते । असाधारणतो ज्ञेयं कीर्तनं पापनाशनम् ॥
ऋतुपर्णस्य राजर्षेः असाधारणतः परम् । विज्ञेयं निखिलैरत्र कीर्तनं पुण्यवर्धनम् ॥
तत्र साधारणे ज्ञेये सर्वेषामपि सन्ततः(म्) । कीर्तनात्कलिनाशत्वं पापनाशत्वमेव च ॥
तत्पुण्यवर्धनत्वं च तेष्वेतेषु च त्रिष्वपि । असाधारणधर्मोऽयं एक एव द्वयं (तु) तत् ॥
शिष्टं साधारणो धर्मः सर्वत्रैवं हि निर्णयः । एतेषां स्मरणात्पश्चादुत्थायोर्वीं प्रणम्य वै
इमं मन्त्रं समुच्चार्य गच्छेत्कार्येषु सन्ततम् । तं च मन्त्रं प्रवक्ष्यामि भवतां विशदाय वै

## प्रातरुत्थाय गमनमन्त्रः

समुद्रवसने देवि पर्वतस्तनमण्डिते । अनेकरत्नसंलग्ने पादस्पर्शं क्षमस्व मे ॥
बहिरागत्य तत्पश्चान्मत्रेणानेन धर्मतः । जलपात्रं च संगृह्य मृद्धानीमपि भक्त्रिकाम् ॥
ग्राहयित्वा दृढां पूर्वं यत्नसंपादितां शुभाम् । नैऋत्यामिषुनिक्षेपमात्रं गत्वाऽथ तत्र वै ॥

## पुरीषोत्सर्जनम्

भावयित्वा तृणैर्भूमिं तत्र मूत्रपुरीषयोः। मोचनं वै प्रकुर्वीत रात्रौ चेद्दक्षिणामुखः॥
उदङ्मुखोदितो नित्यं विधिरेवं सदोदितः। मूर्धानमुत्तरीयेण वेष्टयित्वा पुनस्ततः॥
कृत्वा निवीतं यज्ञाख्यसूत्रं कर्णे निधाय च। कुर्यान्मूत्रं पुरीषं च तत्पात्रस्थोदकेन वै॥
तया मृत्तिकयासम्यक् क्षालयेद्गंधवर्जितम्।
मृत्तिकाग्रहणं चापि भस्त्रिकायाः सकाशतः॥
अन्येन कारयित्वैव तत्सकाशात्स्वयं ततः। संगृह्य शौचं विधिना कुर्यादेवान्वहं परम्॥

## मृत्तिकासंख्या

पञ्चवारं गुदे कुर्यादेकवारं च मेहने। करयोः पादयोः पूर्ववदेवेति विधिः परः॥
एतस्य द्विगुणं प्रोक्तं वर्णिनः सन्ततं महत्।
त्रिगुणं तु वनस्थस्य यतीनां तु चतुर्गुणम्॥
एवं नृपस्य वैश्यस्य शूद्रस्य च विधानतः। तत्क्रमेण प्रकथितः मृत्तिकासंग्रहश्च सः॥
अष्टम्यां भौमवारे च सर्वेषां शस्यते किल।
ग्रामात्प्राच्यामुदीच्यां वा मृत्तिकासंग्रहं चरेत्॥
अपराह्णे प्राङ्मुखेन स्थित्वा भूमिं समन्त्रतः।

## मृत्तिकाग्रहणमन्त्रः

प्रणम्य प्रार्थयित्वाऽथ उद्धृतासीति मन्त्रतः। तावकीं वसुधे मृत्स्नां शौचार्थमहमद्य वै॥
संगृहीष्यामि जननि क्षमस्वाशेषमातृके। मन्त्रेणानेन संगृह्य खनित्रपिटकायुतः॥
प्रोथयित्वाथ तामन्ये नैव पुंसा विचक्षणः। गृहमागत्य पश्चात्तु वस्त्रसंशोधनादिना॥
समीकृत्य समीचीनं सुखस्पर्शस्य चेद्यथा।
सुसंस्कृता सा प्रभवेत्तथा कृत्वा विनिक्षिपेत्॥

यत्रकुत्रशुचौदेशे पश्चात्तां च दिनेदिने। तदा तदा मृद्धान्यैव संगृह्य च पुनः पुनः॥
शौचं कुर्याद्विधानेन न चेच्छौचेन केवलम्। वैकल्यभाग्भवत्येव पुनः सर्वेषु कर्मसु॥
तादृशेन न संदेहस्तन्मूला हि क्रिया पराः। यया कयाचित्कृतया मृदाशौचं वृथा भवेत्॥
कृतमप्यकृतप्रायं तस्मात्तत्परिवर्जयेत्।

## गण्डूषविधिः

कुर्यात्तदन्ते गण्डूषं सम्यग्द्वादशसंख्यया। मूत्रमात्रस्य चेद्भूयो दशाष्टौ वा मृदासकृत्॥
समुष्कं क्षालयेत्सम्यक् शुद्धेन पयसैव हि। अशुद्धेनातितुच्छेन नदुर्गन्धेन कदाचन॥
न क्षालयेत्तथा शौचं गुह्यं पादकरावपि। अशुद्धजलतोयस्तु शौचं मूत्रपुरीषयोः॥
कुर्यात्पुनरसौ च स्यात्तद्दोषस्य निवृत्तये। शुद्धेन पयसा शौचं पुनः कृत्वा विधानतः॥
पादौ प्रक्षाल्य चाचम्य स्नानं कुर्यात्समन्त्रतः। नचेदस्पृश्य पयसः स्पर्शनेनैव केवलम्॥
प्राप्तं ह्याशौचमधिकं निवृत्तिस्तस्य तेन हि। समन्त्रेण न चान्येन संगेनेति महर्षयः॥
रहस्यमत्र वक्ष्यामि यदुक्तं तन्मया पुरा। द्विमुख्युदकतोऽतीव कृतमाचमनं तु यत्॥
तत्पुनात्यवशात्पापं तदा किमपि नास्ति हि।
मन्त्रस्नानादिकं कृत्स्नं तत्स्पृष्ट्वैव क्षणाल्लभेत्॥

## दन्तधावनम्

निर्वृत्य शौचं पश्चात्तु दन्तधावनमाचरेत्। तत्पुनस्तु मृताहेषु गुरूणां यस्य कस्यचित्॥
भ्रात्रादेर्वा कनिष्ठस्य दर्शादिष्वखिलेष्वपि। अन्नश्राद्धेषु नितरां न कुर्याद्दन्तधावनम्॥
तेषु चेत्तु पुनस्सम्यक् श्राद्धकतु र्महात्मनः। अपां द्वादशगण्डूषैर्मुखशुद्धिर्भविष्यति॥
तद्भिन्नदिनमात्रेषु निखिलेषु व्रतेष्वपि। नैमित्तिकेषु पुण्येषु कृच्छ्रादिष्वखिलेष्वपि॥
तृणपर्णैः प्रकुर्वीत चामामेकादशीं विना। तयोरपि च कुर्वीत जम्बूप्लक्षरसालकैः॥
रसालवर्णरचितदन्तधावनकर्म यत्। पितृश्राद्धदिनं मुक्त्वा तन्न(दूः)ष्यतिसन्ततम्॥
तत्तत्काष्ठविशेषाणां दन्तधावनकर्मणि। तत्तद्दिनविशेषेषु प्राशस्त्यं न तु सन्ततम्॥
तद्विशेषेणसंकीर्त्य कृत्वा तद्ग्रन्थविस्तरम्। प्रयोजनं न किमपि प्रकृते दन्तधावनम्॥

वर्णनीयं च सौलभ्यात्तत्तथैव निरूपितम् । पुनश्च संप्रवक्ष्यामि संग्रहेणैव तत्पुनः ॥
व्रतश्राद्धान्यदिवसमात्रेषु क्षीरिणां सदा । प्रशस्तान्येव काष्ठानि दन्तधावनकर्मणि ॥
दन्तधावनतः पश्चात् कुर्यादाचमनद्वयम् । ततः स्नानाय च पुनः कुर्यादाचमनद्वयम् ॥

प्राणायामत्रयं कृत्वा पश्चात्संकल्पमाचरेत् ।
देशं कालं च संकीर्त्य तिथिवारसमन्वितम् ॥

## स्नानमन्त्राः

प्रणम्य तीर्थराजं च तस्मै दत्त्वार्घ्यमुत्तमम् । आपोहिष्ठाहिरण्यादिद्रुपदादिकमेव च ।

हिरण्यशृङ्गाद्यखिलं इन्द्वन्तं पावमानकम् ।
आपो वेति महामन्त्रां सितासितऋगादिकम् ॥
जप्त्वा निखिलमन्त्रान्तान्पावनान्श्रुतिशीर्षगान् ॥

## स्नानान्तरकर्तव्यम्

प्रोक्षयित्वावगाह्याथ निश्शब्दं चोरवज्जले ।
ऋषीन् देवान् पितृन् पश्चात्तर्पयित्वा च शास्त्रतः ॥

आचम्य च विधानेन मन्त्रेणैव ततः परम् । अनेन तर्पणं कुर्यात्तमिमं वर्णयाम्यहम् ॥
यन्मया दूषितं तोयं शारीरमलतोऽधिकम् । तस्य पापविशुद्ध्यर्थं यक्ष्माणं तर्पयाम्यहम्

## वस्त्रोदकदानमन्त्रः

अथ वस्त्रं पीडयित्वा भूमौ सिञ्चेच्छिखाजलम् ।
सर्वाङ्गसलिलं चापि भूमौ तिष्ठन्मुहूर्तकम् ॥
तत्तज्जलार्थिनां नित्यं स्रावयित्वा विधानतः ।
यत्तत्स्वीयांगसंसक्तं तज्जलं वै तदर्थिनाम् ॥
दत्वा निकामं तत्पश्चाच्छुद्धं वस्त्रं तु बिभृयात् ।
बहिर्विनिर्गतं स्नातुं सर्वे देवा महर्षयः ॥

द्विजं दृष्ट्वातिसंतुष्टाः तत्पश्चात्सलिलार्थिनः ।
तिष्ठन्ति तत्तटे नित्यं तस्मात्तेभ्यो दिने दिने ॥
कालद्वयेऽतिभक्त्यैव स्नात्वाऽनन्तरमेव वै । सर्वाङ्गसलिलं वस्त्रजलमुक्तविधानतः ॥
दद्यादनेन मन्त्रेण न चेदेनं शपन्ति ते । मदङ्गवस्त्रकेशाघसलिलं यत्तदर्थिनाम् ।
अद्य दत्तं मया नूनमक्षय्यमुपतिष्ठतु । नित्यं कालद्वये स्नानं गृहस्थस्य विधीयते ॥
यतेः कालत्रये तत्स्याद्वर्णिनां तु यथारुचि ॥

## स्नानभेदाः

एकवारं द्विवारं वा यथेच्छं तस्य तत्स्मृतम् । एवं स्नातुमशक्तानां पानीये शीतले परम् ॥
उष्णोदकेन विहितं तत्राशक्तस्य तत्परम् । कण्ठस्नानं कटिस्नानं पादस्नानं तथोक्षणात् ॥
मन्त्रस्नानमतिश्लाघ्यं न चेद्गोरजसापि तत् ।
सर्वेष्वेषु पुनः शक्तिविकलो यदि तत्परम् ॥
छायावगाहनं कुर्यात्तत्तु स्नानोत्तमोत्तमम् । तिष्ठन्मन्त्रजपं कुर्वंस्तदाशक्तस्तु केवलम ॥
तच्छायायां जलं सिञ्चेत्तच्छायास्नानमुच्यते ।
तस्मिन्यद्यप्यशक्तश्चेत् कापिलस्नानमाचरेत् ॥
दिव्यस्नानं विशेषेण स्नानानामुत्तमोत्तमम् । यदा वा लभ्यते तत्तु तदा नैमित्तिकं तु तत्
सर्वपापहरं पुण्यं सर्वेषामपि सन्ततम् । दुर्लभं तद्विशेषेण लभ्यं सातपवर्षतः ॥
संकल्पाचमने तस्य न स्यातां नैव तर्पणम् । धारानिपातपर्यन्तं स्नानमन्त्रजपो भवेत् ॥
मनः पर्याप्तिपर्यन्तं स्थितिमात्रं तदा परम् । स्नानमाहुर्महात्मानः यथारुचि तथाचरेत् ॥
कायानुगुणतः स्नानं विहितं सन्ततं द्विजैः ।
आदौ निखिलधर्माणां निदानं वर्ष्म केवलम् ॥
सर्वं तदानुगुण्येन कर्मजालं समाचरेत् । शिरसः पादयोर्बाह्वोरङ्गानां यस्य कस्यचित् ॥
कायमात्रोपद्रवस्य यदा संभावना भवेत् ।
स्नानतस्त्विति तत्याज्यं मुख्यं त्यक्त्वैव केवलम् ॥

गौणस्नानं तदा कुर्यान्मन्त्ररूपादिकं शिवम् ।
आर्तवान्ते सूतकान्ते कर्तुं स्नानं विधानतः ॥
अशक्ये सति तद्भूयः कारयेद्विप्रवर्त्मना । तावता शुद्धिरेव स्यात्सद्यःस्नानं निवार्यते ॥
आरोग्यान्ते पुनः स्नानं कुर्यादेव विधानतः ।
सदा शुद्धजलस्नानात्परं शौचं प्रकीर्तितम् ॥
आपत्सु येनकेनापि गौणस्नानेन तद्भवेत् । आपत्सुसर्वदागौणस्नानं मुख्यमिति स्मृतम् ॥
स्मृतिसंभावनास्नानाज्जायते चेत्तदा नरः । सर्वथा तन्न कुर्वीत किंतु भौत्यादिकं चरेत्
नित्यस्नानाशक्यकायः शीतवातादिकाक्षमः ।
यथा कायानुगुण्येन कुर्यादेवाखिलां क्रियाम् ॥
सर्वाङ्गमार्द्र वस्त्रेण शोधयेत्तेन केवलम् । अशक्तश्चेत्स्नानफलं लभेतैव न संशयः ॥
शरीरमाद्यं धर्मस्य कारणं केवलं स्मृतम् । ग्रहणे वा पितृश्राद्धदिवसे स्नानवर्जितः ॥
अपि चण्डालसंस्पृष्टः ऋणरोगैकदुर्धरः । सर्वाशौचैकमलिनः पित्रोरेकादशे दिने ॥
दशमे कर्मकालेषु दिवसे द्वादशेऽपि वा । बहूक्ता तादृशेषु (च) विपत्सु स्नानतो यदि ॥
मृतिसंभावना चेत्तु येनकेन प्रकारतः । साक्षात्स्नानं परित्यज्य शक्तौ विप्रमुखेन वा ॥
पुत्रादिसुखतोवापि तत्कृत्वा तत्समाचरेत् । शक्त्यभावे सर्वथापि सलिलस्पृष्टिमात्रतः ॥
भावना चेद्बाधकस्य भस्मस्नानादिनैव हि । संसाधयेत्प्रेतकर्म छायास्नानादिनापि वा ॥
कर्मणो करणे तस्य तादृक् कालेऽस्य केवलम् ।
स्मृतिर्यद्य भयोः पश्चात् बाधकं सुमहद्भवेत् ॥
प्रेतत्वमुभयोश्चापि भवेत्किल तदा पुनः । येन केन प्रकारेण कृते तस्मिन् सपिण्डने ॥
तद्गौणस्नानतो वापि तत्पितुः किल तद्भवेत् । पितृत्वं देवरूपत्वं तावता कृतकृत्यता ॥
मृतस्य पूर्वं भवति तस्मात्कायानुगुण्यतः । स्नाने कृते तावतैव कर्मसाद्गुण्यमश्नुते ॥
आपत्कालेषु सर्वेषां गौणं तत्तादृशं परम् ।
स्नानं मुख्यं भवेन्नूनं मुख्यं स्नानं तु बाधितम् ॥
प्रभवेदेव नितरां निखिलं चैवमेव हि । मुख्यं भवेदमुख्यं हि चैवं तदपि केवलम् ॥

अमुख्यं मुख्यमेव स्यादिति शास्त्रं महर्षिभिः। उपदिष्टं सर्वलोकहिताय सुमहात्मभिः

## द्विमुख्युदकस्नानम्

नित्यस्नानात्परं नित्यं द्विमुख्युदकतो भवेत्। यत्कर्तव्यं कर्मजातं तदेतदखिलं परम्॥
तत्पूर्वमृत्तिकाशौचकार्यादिषु पुनर्यदि। तज्जलं विनियुक्तं चेद् गंगादिषु हठात्परात्॥
तद्बुद्धिपूर्वतस्त्वर्धोदयेऽपि च महोदये। सूर्योपरागादिकालविशेषेषु गुरूनपि॥
न्यक्कृत्य निष्ठीवनतो गुदप्रक्षालनेन च। यत्पापं जायते क्रूरं तदवाप्नोति केवलम्॥
चैलद्वयं समुद्धृत्य शुद्धं हस्तद्वयेन वै। उत्तरीयं प्रथमतः प्रादक्षिण्येन मूर्धनि॥

## वस्त्रधारणमन्त्रः

धृत्वाऽथ प्राङ्मुखस्तिष्ठन् वस्त्रं यद्धारणाय तत्।
बिभृयात्कच्छया युक्तं आवहन्तीति मन्त्रतः॥
न चेत्सोमस्य तनूरित्येतेन यजुषा सदा।
वाससो धारणे मन्त्रौ चोदितौ अथवा पुनः॥

तूष्णीकं वा तद्धरेद्वै पादप्रक्षालनं ततः। कृत्वाऽऽचम्य विधानेन प्राणायामादिपूर्वतः॥
परमेश्वरतुष्ट्यर्थं प्रातस्सन्ध्यामहं शिवाम्। उपासि(ष्यइ)ति संकल्प्य मन्त्रप्रोक्षणमाचरेत्
सन्ध्याकर्माख्यतद्दिव्ययोग्यतायै तदुच्यते। आपोहिष्ठेति नवभिः यजुर्भिः प्रणवेन वै
संयुक्तैरतिशुद्धस्तैः प्रोक्षणं तादृशं शिवम्। मुखे प्रकथितं सद्भिः सूर्यश्चेति ततःपरम्।
महामन्त्रा वेदमध्यः चतुर्विंशतिवर्णकः। रक्षन्तामिति लोडन्तः कर्तारस्तत्ररक्षणे।

सूर्यश्च मन्युस्तत्पश्चात् मन्यूनां पतयस्तथा।
तत्पापेभ्यः सकाशान्मां एको मन्त्रोऽयमुच्यते॥

यद्रात्रेरित्ययं मन्त्रः द्वितीय इति चोदितः। अवलुंपत्वन्त इति द्वात्रिंशद्वर्णको मनुः॥

यत्पापं कृतवानस्मि रात्र्यारात्र्यामितिस्मृतम्।
ब्रह्मा चास्मीति संप्रोक्तं मनश्शब्दायश्च षट॥

प्रसिद्धा एव नितरां षष्ठः शब्देषु तेषु च। तृतीयंतइति ज्ञेयः साहचर्येण संस्कृतः॥

छान्दसः स च विज्ञेयः सूक्ष्मदृष्ट्या ततः परम् ।
तदन्वयः प्रकर्तव्यः कर्तारात्रिरहश्च हि ॥
परस्मैपदिलोडन्तः क्रियेयं समुदीरिता ।
यत्किञ्चेति तृतीयोऽयं मन्त्रस्वाहान्तकश्च सः ॥

अष्टाविंशतिवर्णोऽयं जुहोमीति क्रियापदम् । अहं कर्तेति सुस्पष्टः मां कर्मेति तथैव हि ॥

स्वाहाशब्देन होमः स्यात् अत्र पानं स्मृतं किल ।
यथा कथंचिद्द्रव्यस्य त्यागो होम इतीरितः ॥

सूर्यः प्रसिद्धः सर्वत्र सत्यशब्दस्तदर्थकः । असावादित्यवाक्येन श्रौतेनैव तथोदितः ॥
तस्यैवामृतयोनित्वं केवलं तद्विशेषणम् । प्रथमः प्रार्थनारूपः द्वितीयोऽपि तथाविधः ॥

तृतीयो होमरूपः स्यात्त्रिभिः संमन्त्रितंजलम् ।
सर्वपापविनाशाय प्राशयेदिति सा श्रुतिः ॥

भिन्नक्रियात्वान्मन्त्राणां मन्त्रभेद उदाहृतः । यत्र भिन्नक्रिया तत्र सर्वत्र श्रौतकर्मणि ॥
प्रदृश्यते मन्त्रभेदः पूर्वार्थस्यानापेक्षणात् । सापेक्षत्वे तु पूर्वार्थस्य चेदेको भवेत्तु सः ॥
स्योनन्त इति वाक्ये सः तस्मिन्नित्यत्र निश्चितः । एतन्मन्त्रत्रयजलप्राशनं तस्य कर्मणः
अत्यन्तयोग्यतासंपादनाथ सन्ततं स्मृतम् । पुनराचमनं कृत्वा दधिक्रावद्वयेन वै ॥
पूर्वोक्तैर्नवभिर्भूयास्त्वापोहिष्ठादिभिः शिवैः । हिरण्यवर्णात्रितया शिवेनेति च मन्त्रतः
चतुर्विंशतिसंख्याकैर्मार्जनं प्रतिवर्णके । गायत्रीयेप्रोक्तियोग्यतार्थं प्रोचुरितिस्म तत् ॥
द्रुपदानामगायत्री सर्वमन्त्रोत्तमोत्तमा । सर्वेन(ण)हंसमुत्सर्गहेतवे सा प्रतिष्ठिता ॥

तयाभिमन्त्रितं तोयं त्यक्तं चेत्तावताखिलम् ।
एनोवृन्दं सद्य एव त्यक्तं नष्टं गतं भवेत् ॥

## अर्घ्यदानम्

अथाचम्य विधानेन गायत्र्यैवाभिमन्त्रितम् ।
मन्देहानां विनाशाय त्रिवारं अतियत्नतः ॥

गोश्रृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत्। तद्दोषपरिहाराय कुर्याद्भक्त्या प्रदक्षिणम्॥

असावादित्यो ब्रह्मेति ब्रह्म ध्यायेत्समाहितः।
तद्ब्रह्मध्यानमेव स्यात्संध्येति ब्रह्मवादिभिः॥
नित्यं सम्यक् कृतं ध्यानं वारत्रयमतीव च।
ब्राह्मण्यकारकं तत्स्यात् यत्तत्सन्ध्यात्रयं शुभम्॥
दिने दिने ब्राह्मणेन असावादित्यमन्त्रतः।
सोऽहंभावनया दिव्यं कृतं ध्यानं महर्षयः(र्षिभिः)॥

सन्ध्येति प्रवदन्त्येते श्रुत्युक्ताः परमर्षयः। ब्रह्मध्यानात्परं कर्म नान्यत्किमपि विद्यते॥
तच्च ध्यानं मन्त्रवाक्यार्थतत्त्वज्ञं परं महत्। उत्तमोत्तममित्युक्तं तद्वाक्यार्थश्च केवलः॥
न कार्यकारकः प्रोक्तः किंतु सोऽनुभवात्मकः। गुरुप्रसादैकलभ्यो गुरुरेवेश्वरः परः॥
देवगुर्वोर्न भेदो हि गुरुर्देवाद्विशिष्यते। गुरुः सम्यग्बोधयति तमः परिहरेदपि॥
देवोऽपि गुरुरूपेण समागत्य कृपामयः। तद्बोधकः प्रभवति तेनासौ कृतकृत्यताम्॥

सम्प्राप्नोत्येव सततं तस्माद्वन्द्यः सदा गुरुः।
सन्ध्यान्ते तु प्रतिदिनं गुरुभ्यो नम इत्यपि॥
सन्ध्यायै चापि सावित्र्यै गायत्र्यै नम इत्यपि।
देवताभ्यश्च सर्वाभ्यो वेदेभ्यो वा विधानतः॥

देवेभ्यो वाऽथर्षिभ्यश्च मुनिभ्यो नम इत्यपि। नमस्कारं प्रकुर्वन् वै प्रवदन्वा विशेषतः
प्रदक्षिणं प्रकुर्वीत कामोऽकार्षीन्मनुं जपेत्। तदा मन्युरकार्षीदित्येतद्यत्तन्मनुं जपेत्॥

## दिङ्नमस्कारः

नमोनमश्च मन्त्रान्ते वक्तव्यं स्यात्त्रिकालके।
कर्णौ पादौ तथा स्पृष्ट्वा कृताञ्जलिपुटस्ततः॥

मन्त्रानशेषान् तत्तत्कुलप्राप्ताचारतश्च तान्। उपदिष्टांश्च संप्राप्तान् जपेदेव विधानतः॥

अर्घ्यान्ते वा तथा गायत्र्युपस्थानान्तरं तु वा।
नमः प्राच्यादिमन्त्रांश्च प्रवरादीन्विधानतः॥

होतृप्रवरतो नित्यं नमस्कारादिकर्मसु । सर्वेष्वेवाविशेषेण वदेदध्वर्युमार्गतः ।।
प्रवरस्सः( स् ) तत्र हि स्याद्दर्शादिष्वेव नान्यतः ।।

## प्रायश्चित्तार्घ्यः

अर्घ्यत्रयात्परं कालद्वयस्यास्य व्यतिक्रमे । प्रायश्चित्तक्रियायै स्यादर्घ्यमेकं पुनः स्मृतम् ।।
केचिच्चतुर्थ्यं चेति प्राहुरार्या मनीषिणः । अर्घ्यक्रियासु संत्यक्ता गायत्री या द्विजोत्तमैः
तस्याः प्रत्युपसंहारहेतवे प्रतिलोमतः । जपेदेव विधानेन तत्प्रकारश्च वर्ण्यते ।।

## गायत्रीवर्णसंख्यानिश्चयः

(त् )यादचोप्रनः यो यो धि हिमधी स्यवदे गोंभ । यंणिरेर्वतुवित्सत ।।
प्रतिलोमविधौ यंणि वर्णभेदेन वर्णनम् । अनुलोमप्रकारे तु वर्णैक्येनैव चोच्चरेत् ।।
तस्मिन्नर्थे श्रुतिः सूत्रं प्रमाणं प्रतिपादितम् । सूत्रं तत्सवितुरिति पच्छोर्घर्चश इत्यपि ।।
प्रतीकग्रहणात्सूत्रकारेणात्र ततस्तथा । संहितायामाद्यकाण्डपञ्चमप्रश्नके यथा ।
पाठस्तथेत्येकवर्णस्ययस्य वर्णस्य वाक्यतः । व्यमेकमेव वर्णस्तु संख्यायां तद्द्वयं भवेत्
णयोःस्वीकृत्य भेदं वै संख्या सा कथिता परा ।
चतुर्विंशतिका सर्वैः त्रीणि सूर्ये यथा तथा ।।
गायत्रीमातृवाक्येषु पथि भादिषु केवलम् । तुरीयपादेन तथा तन्मत्रोद्धारणं भवेत् ।।
तान्मत्रानप्यद्य सम्यग्विशदाय निरूप्यते ।
चथिभतन्मुखतः प्रोक्तं रोयोगों सा द्वितीयकम् ।।
रयोदेति तृतीयं स्या( त् )जनवत्तु तुरीयकम् । वक्ष्यप्रसे पञ्चमं स्यादेधीचोसेतिषष्ठकम्
सप्तमं तणिगमद्वयं हि यादो तथाष्टमम् । एतेषामपि सर्वेषां मूलभूता श्रुतिः शिवा ।।
वर्णक्रमैककार्याय नान्यकार्यायते न हि । मन्त्रोद्धारः प्रभवति मन्त्रोद्धारेण तेन च ।।
प्रतिलोमानुलोमाभ्यां वाक्यानां न्यसनात्खलु । सर्वसिद्धिः प्रभवति तदेतद्गुरुवाक्यतः
विज्ञेयो हि भवेन्नूनं मन्त्र (स्तदु) पदेशतः । विप्रत्वसिद्धिर्भवति तत्परं तदुपासनात् ।।
तज्जपेन च तन्नित्यं विप्रत्वमतिदुर्लभम् । अतितीक्ष्णतरं स्याद्धि प्रतिनित्यं शनैः शनैः

तादृशस्यास्य मन्त्रस्य त्यागमात्रेण तत्क्षणात् । तद्विप्रत्वस्वरूपस्य जायते हानिरीदृशी
सा गायत्री वेदमाता महद्ब्राह्मण्यमूलिका ॥

## ओंकारव्याहृतीनां प्रशंसा

सादौ व्याहृतिसंभूता व्याहृतिस्तारमूलका ।
गायत्रीमूलका वेदा वेदा लोकाश्रयाः शिवाः ॥
यथा बीजे वटस्तद्वत्तारे सर्वेऽपि तेऽखिलाः ।
भूर्भुवः स्वरादयः प्रोक्ताः संलीनाः सन्ति तेन सः ॥

तारः सर्वाधिकः प्रोक्तः सर्वकारणकारणम् । सर्ववेदक्रियामन्त्रदेवलोकैकविग्रहः ॥
सर्ववन्द्यश्च नितरां स एव ब्रह्मबोधकः । तदभेदस्वरूपश्च तद्युपासनहेतवे ॥
तदुक्तिपूर्वकत्वेन गायत्र्या व्यक्तिरुच्यते । वेदाद्युच्चारणे तस्मात्तन्मुखे सउदीर्यते ॥
तारतो व्याहृतिरिति यदुक्तं तन्निरूप्यते । संग्रहेणाद्य भवतां विशदाय क्रमेण वै ॥
तालवर्णत्रयाद्वर्गो बिन्दुनास्यात्तदर्णकः । स्वरोनादविशिष्टाभ्यां वैशिष्ट्येतत्परो भवेत्

नादेवे तत्समोवर्णः वेदतारत्रयेण सुः ।
तत्त्रयेण च ताभ्यामुः स्वरोऽन्त्यो वाऽखिलैः पुनः ॥

भूशब्देनात्र भूलोकः ओंकारस्तत्स्वरूपकः । भुवर्लोकस्तथा ज्ञेयः सुवर्लोको भुवस्सुवः
अलिंगकौ प्रकथितौ अव्ययाविति केचन । महर्लोकस्ससकारान्तः महर्लोकैकवाचकः ॥
जनः सत्ये त्वकारान्ते पुंनपुंसकरूपके । लोकैकवाचके तेऽपि त एते निखिला अपि ॥
लोकैकवाचका ज्ञेयाः तदुच्चारणपूर्वतः । ओंकारो विद्यते तेन त एते तत्स्वरूपिणः ॥
भूलोकोऽप्यों भुवश्चाप्योंकार एव न चापरः । एवं सर्वत्र विज्ञेयस्तदर्थस्तत्त्वदर्शिभिः ॥
एवं सप्त व्याहृतयस्त्रिव्याहृत्यथ चोदिताः । एतद्द्वयेन ते सव गायत्रीमातृकास्ततः ॥

जातास्तेभ्यश्च वाक्येभ्यो गायत्री सा समुद्धृता ।
अखिलैर्मिलितैरेतैः आपोज्योतिरसाश्च ते ॥
तदीया इति विज्ञेयाः ते ब्रह्मैवेति च स्मृताः ।
व्याहृतीनां तिसृणां च मध्ये सर्वेऽपि ते पुनः ॥
ओंकारमध्ये ते स्युश्चेन्महामन्त्राख्यकास्स्मृताः ॥

## प्राणायामः

दशप्रणवगायत्री तया कार्याखिलेष्वपि । कृत्येषु नित्यादिषु च प्राणायामो दिने दिने ॥
तत्क्रमं चापि वक्ष्यामि सर्वानुष्ठानकारणम् । दशप्रणवगायत्रीत्रितयेन विधानतः ॥
कर्तव्योरेचकः पूर्वं तदनन्तरमेव वै । तदैव पूरकः कायः पुनश्च तदनन्तरम् ॥
कुम्भकश्च प्रकर्तव्यः तद्विधानेन केवलम् । एवमेतत्त्रयं चेत्तु कृतं भवति तत्परम् ॥
प्राणायामस्त्वेक एव एवं सर्वेषु कर्मसु । प्राणायामत्रयं कार्यमर्थचिन्तनपूर्वकम् ॥
तावत्मत्रेण नितरां बहुजन्मकृतं तु यत् । आबिलौघं तत्क्षणेन आगस्त्वेनश्च केवलम् ॥
अंहोविलयमायाति चित्तशुद्धिर्भवत्यपि । प्राणायामसमोधर्मो प्राणायामसमो जपः ॥
प्राणायामसमो यज्ञः प्राणायामसमो दमः । प्राणायामसमं तीर्थं प्राणायामसमं तपः ॥
प्रणायामसमं दानं प्राणायामसमं श्रुतम् । प्राणायामसमो नान्यः पावको जगतीतले ॥
एकवारकृतः सम्यक् प्राणायामोऽखिलप्रदः । सर्वसिद्धिकरः पुंसां बलिपुष्टिविवर्धनः ॥
आधिव्याधिप्रशमको ह्यपमृत्युनिवारकः । ह्यनुष्ठितः प्रतिदिनं कालमृत्युनिवारकः ॥
दीर्घायुष्यैकजनकः शतायुष्याधिकप्रदः । तस्माद्विचक्षणो नित्यं प्राणायामपरो भवेत् ॥
स तु वायोर्निरोधैकभवितव्यः सदाकिल । तथा तदर्थानुसन्धानपूर्वकविधेयः (?) ॥

## प्राणायामासमर्थस्य तन्मन्त्रमात्रपठनविधिः

तथा कर्तुमशक्तश्चेत् ब्राह्मणोऽसौ निरन्तरम् ।
नासां प्रगृह्य तूष्णीकं मन्त्रमात्रमुदीरयेत् ॥

द्विषष्टिवर्णकं वर्णस्वरमात्रेण वा यदि । कृत्यकृत्यस्तावता वा त्रिवारोच्चारणात्परम् ॥

तस्मिन् मन्त्रे मन्त्रराजे प्रणवा दश हि स्मृताः ।
चतुर्विंशतिसंख्याकाः गायत्रीयास्तु वर्णकाः ॥

शुद्धव्याहृतिवर्णाश्च पञ्च तेषां पुनस्तथा । उच्चारणेऽपि पञ्चैव व्याहृतीयास्ततो दश ॥
मापोज्यो दशकं चाथ महद्वयं जनः सत्यं तपश्चेत्यष्टकं स्मृतम् ॥

एतावन्मात्रवर्णानां केवलोच्चारणात्परम् ।
प्राणायामाख्यकं कर्म कृतमित्येव चोदितम् ॥

एतस्य प्रातिलोम्ये तु कदाचिद्घटते यदि । सप्तकोटिमहामन्त्रजापकोऽसौ भवेद्ध्रुवम् ॥
सर्वाण्यस्त्राणिवैष्वेव वर्णव्यत्यासभेदतः । उच्चारणविशेषेण भवेयुः किल तावता ॥
प्राकृतस्यास्य कृत्यस्य समुदीरणतः परम् । प्रयोजनं नैव चास्ति तस्मात्तदुपरम्यते ॥
यद्य क्तमपि तत्सर्वं विस्तरं वैदिकस्य तु । कर्ममात्रस्य सततं बाधकं प्रभवेद्ध्रुवम् ॥
इयान्विशेषः सर्वत्र मन्त्रमात्रस्य केवलम् । (सर्वदैव) विशेषेण तदर्थस्यानुचिन्तनम् ॥
महातत्कर्मसाद्गुण्यकारकं वीर्यवत्तरम् । श्रेयस्करं विशेषेण चित्तशुद्धिप्रदायकम् ॥
एतावन्मात्रतत्कर्म यत्तत्सर्वं दिने दिने । नित्यत्वेनैकविहितं सम्यक् चलति तेन चेन् ॥

## कवचमुद्रादीनामवैदिकसन्ध्यापरता

न्यासबीजाक्षरादीनामस्त्रादीनां पुनः पुनः । आवृत्तितोध्यानयन्त्रनामतन्त्रादिसंघकैः ॥
एकांगमात्रे कृत्स्नानां अतिकालविलम्बतः । प्रधानं कर्म किमपि भवेन्न समनुष्ठितम् ॥
मन्त्रस्य कवचादीनामभावे निष्प्रयोजनम् । इत्युक्तशास्त्रं तत्सर्वं अवैदिकपरं तु तत् ॥
कथं तदितिचेद्भूयस्तच्चापि समुदीर्यते । शुद्धवैदिकमात्रस्य वेदप्रोक्तस्य कर्मणः ॥
कर्तव्यत्वेन विहिते प्रकृते तादृशस्य चेत् । कवचन्यासबीजानां मुद्रापञ्जरवर्णने ॥
मालामन्त्रमहामन्त्रशक्तिकीलार्गलार्पणे । एवं सर्वत्र चेद्भूयस्तत्तन्नामसहस्रतः ॥

सन्ध्यामात्रस्य सायं च नालं केवलमेव वै ।
कालो जपस्य चेद्भूयः प्रधानस्य कदा किमु ॥

अनन्तरं पुनरपि पाश्चात्यानां तु कर्मणाम् । अग्न्युद्धरणमुख्यानां उत्सर्गो(वा?)रकोभवेत्
कालो न लभ्यते तेषां तदेतदखिलं ततः । तान्त्रिके लौकिके वेदानधिकारिण्यवैदिके ॥
उपपद्य त वा सम्यक् भवेद्वा न भवेत्तु वा । ऋषिध्यानादिकं चापि मन्त्रार्थज्ञानशून्यके
तावन्मात्रं तु वा भूयादिति निश्चित्य केचन । ऋषिश्छन्दोदेवतादिपरिज्ञानं महत्त्वतः ॥

प्रशंसां कृतवन्तस्ते तावन्मात्रेण केवलम् ॥

## अर्थज्ञानवता कृतसन्ध्यावन्दनप्रशंसा

समन्त्रो वीर्यवान् किंस्यात्सुस्पष्टे तु तदर्थके। स्वत एवाखिलं तस्य समीचीनं भवत्यलम्
तत्तदर्थमात्रतो भूयः कर्मसिद्धिश्च जायते। य एतं चीयते यउचैनं वेदेति सा श्रुतिः॥

कर्म कर्तुर्यादृशं स्यात्फलं तस्मात्ततोऽधिकम्।
अर्थज्ञानवतां पुंसां तूष्णीकं स्वत एव हि॥
फलं भवेदिति पुनः सा प्रोवाच श्रुतिः समा।
अर्थज्ञानैकशून्यानां कर्मकृत्याफलं स्मृतम्॥

तावन्मत्रं देवबुद्धिपूर्वं चेदुत्तमं भवेत्। वस्तुतो लोकरीतिस्तु सन्ध्यादिषु विशेषतः॥
मन्त्रज्ञानैकविकलाः सर्वदेशेषु मानवाः। मन्त्रमात्रपराः केचिदत्यल्पाश्च विशेषतः॥
तथा क्रियामात्रपराः कर्माभिनयनाः परे। वस्तुतो यत्रकुत्रापि मन्त्रमात्रोऽपि दुर्लभः॥
अथापि लोके ब्राह्मण्यं गोपनीयं विशेषतः। न प्रकाश्यं बहिर्नित्यं वन्दनीयं सुरैरपि॥

सन्ध्यामूलमिदं ब्राह्मण्यं मन्त्रमूला च सा परा।
सन्ध्यामन्त्राश्च सर्वत्र सर्वेषामपि सन्ततम्॥

समा एव परा दिव्याः महद्ब्राह्मण्यमूलकाः। सर्वेषामपि सन्तीति निश्चयेन दृढेन वै
प्रपालनीयं तत्तस्माद्विवादं तत्र केवलम्। न कुर्यादेव शास्त्रेण कृतोपनयनो यदि॥

संप्राप्तपूर्णब्राह्मण्य इत्ये (षा वैदिकीश्रुतिः)।

## ब्राह्मणप्रशंसा

शास्त्रमात्रेण निश्चित्य गौरवेणार्चयेच्चतम्। शिखायज्ञोपवीतैकमात्रेणापि स्वरूपततः॥
मुखवर्णेन तत्वेन वाचा तद्भाषणेन च। ब्राह्मबीजैकमाहात्म्याद्वैलक्षण्यमतीव च॥
इतरेभ्यो भृशं तस्मिन्

एवमेकः पाठः

इतरेभ्यो (भृ) शंदैवात्प्रथुरेदेव पश्यतः। विप्रमन्त्र विप्रमात्रः कामतस्सततं महान्॥
पक्षपातः प्रकर्तव्यो विशेषेण प्रवच्मि वः। सर्वेषामपि वर्णानां अप्ययं ब्राह्मणब्रुवः॥

गुरुरित्येव विज्ञेयः नावज्ञेयः कदाचन । तन्तुमात्रप्रधानोऽपि ब्राह्मणो नामधारकः ॥
तथैव ब्रह्मबन्धुर्वा सर्ववन्द्यो न संशयः । ब्रह्मवीर्यसमुत्पन्नः सर्वकर्मैकसंश्रयः ॥
कर्मभिर्वर्जितो वापि नाममात्रप्रधानकः ।
सोऽयमब्राह्मणः प्रोक्तः पूजामर्हति सोऽप्ययम् ॥

## ब्राह्मणब्रुवो निन्दा

भ्रष्टातिदुष्टसुस्पष्ट व्रात्यकर्मद्विजाख्यकात् । संजातो जातकर्मादि मन्त्रराहित्यसंस्कृतः ॥
नाममात्रोपनयनो मन्त्रोच्चारणमात्रके । तत्पितुस्तस्य वैदग्ध्यस्पष्टराहित्यकर्मतः ॥
विप्राभिधानो विप्रागारारात्कृतनिवासतः ।
अत्यन्ताब्राह्मणत्वेन प्रसिद्धोऽपि पुनस्तराम् ॥
तद्ब्राह्मण्यं गोपनीयं तत्कर्म चापि वच्मि वः । तत्रत्यैरखिलैस्तस्य मृतिश्राद्धादिकर्मसु॥
ब्राह्मणैर्मन्त्रकार्येषु पालनीयः प्रयत्नतः ।
न त्याज्यो न बहिष्कार्यो बोधनीयस्तदा तदा ॥
जातित्वेन स्थितो यस्मात् शि ( च्छि ) खातन्तुसमन्वितः ।
यदा तदा स्नानसन्ध्याभासमात्रप्रधानकः ॥
सन्ध्यास्नानात्परं भुक्तिर्विना ताभ्यां न भुज्यते ।
इज्याचारैककृत्यश्चेत्सर्वैस्तैः कामचारतः ॥
सद्भिः संरक्षणीयः स्याद् ब्राह्मण्यं तादृशं महत् । यद्ययं भुक्तिकालेषु सर्वसाधारणेन वै ॥
अन्नप्रदानकार्येषु महेषु प्रयभूरिषु । समागतश्चेदन्नाय तदा स किल कुत्रचित् ॥
कोणभागे पुण्यपङ्क्तिदूरतस्तस्य कल्पयेत् ।
संस्थानं तादृशैरेव यैः कैश्चिद्दूरपङ्क्तिभिः ॥
दुराचारैर्दुर्विनीतैश्चर्वणं कारयेदपि । उत्सवेषु विवाहेषु मौञ्ज्यादिषु सतां गृहे ॥
श्रीमतां भगिनां पुंसां शुचीनां ब्रह्मवादिनाम् ।
अत्यन्नदानकालेषु जातिमात्रोपजीविनाम् ॥

अन्नदानं प्रशंसन्ति नार्हन्त्येवासहिष्णुताम् । दूरीकृतं तिरस्कारं छत्कारं दुष्टभाषणम् ॥
नार्हन्तिदुर्जनाश्चापि दुराचारैश्च निन्दिताः । अन्नमात्रप्रदानेन महतां दक्षिणा च या ॥
दीयते तद्दशांशेन द्वादशांशेन वा पुनः । दत्वोद्वास्यादरिद्रा या विधवाश्चविशेषतः ॥

अपुत्रिण्यः सपुत्रिण्यः यथोत्साहेन वाक्यतः ।
संभावयित्वा यत्किंचिद्दत्वैव स्वानुरूपतः ॥

कालदेशानुगुण्येन दक्षिणा भोजनादिना । येनकेनाप्युपायेन दोषयित्वैव चोद्वसेत् ॥

नयक्कं ( कं ? ) चनतत्पीडाप्रलापैरतिपीडनैः ।
अत्यन्तभाग्यवान् तेषु न भग्नाशान् प्रकल्पयेत् ॥

यः कश्चनापि नितरां वैश्वदेवावसानके । भुक्तिकाले विशेषेण व्रतचर्यासु सर्वदा ॥

जातकादिषु पुत्राणां मौञ्ज्यादिषु तथाप्यति ।
विवाहे पुत्रिकायाश्च दक्षिणा भुक्तिकर्मणि ॥
समागतानबन्धून् वा पण्डितानखिलान् खलान् ॥

## उत्सवादिष्वनाहूतागतानामनिराकरणम्

अनाहूयैव चापल्यादागतानतिदौष्ट्यतः । सुप्रसिद्धदुराचारान् दुर्मुखानतितुच्छकान् ॥
दुश्चरित्रान्विशेषेण पङ्गूनन्धान् दुराकृतीन् । असतोऽतीवसर्वत्र सदा संग्रहकानपि ॥
कृपणान् दुर्गतान्नित्यकलहैकपरानपि । न पीडयेन्न चाक्रोशेन्नावमन्येन्न भीषयेत् ॥
न वदेच्चापि दुर्भाषा वैमुख्यं प्रापयेन्न तु । भग्नान्नैव प्रकुर्वीत कुर्यात्प्राप्तमनोरथान् ॥
सुमुखानतियत्नेन दरिद्रोऽपि यतन्मति । कल्याण्या भाषया सम्यगभिपूज्यैव कर्मसु ॥
तादृशेषु विशिष्टैश्चैव पूजयेद्वासयेदपि । एवं सत्यत्र सुमहान् भाग्यवान्मतिमानति ॥

श्रीमान् कृती पुण्यकर्मा कृत्याकृत्यविशेषवित् ।
दयार्द्रहृदयो योगी कल्याणाभिजनो महान् ॥
धनधान्यग्रामसीममहद्राज्यमहाधनी ।
अपि सन् किं पुनः स्वस्य संप्राप्ते पुत्रपौत्रयोः ॥

विवाहे जन्ममौञ्ज्यादिमहाकर्मसु भूरिषु । ज्योतिष्टोमादिकृत्येषु महादानादि कर्मसु ॥

यमयज्ञे शुभागारे पुण्ये शूलगवेऽपि वा। अष्टकायां सर्पबल्यां अपूर्वाधानकर्मणि॥
प्रथमोपाकृतौ पुत्रपौत्रयोर्वा तथाविधे। अपूर्वपुत्रिकाताधेद्द(क्सु)त्सुमहोद्ध(त्स)वकर्मणि

कथं समागतान् पूर्वप्रोक्तान् लोकान् महाशयाः।
समागतान्महादुःखाद् दारिद्र्येणैव दुर्गतान्॥
प्रकुर्याद्विमुखान् शक्तः स्वयमत्यन्तभाग्यवान्।
यदिकुर्यादुत्सवेषु दरिद्रानागतान् गृही॥
विमुखास्तस्य साश्र(श्री)स्तु सद्यो नष्टा भवेद् ध्रुवम्।
समागता ये सुमुखाः प्राप्तकामा मुदायुताः॥
अभ्यागताश्चातिथयः यस्य गेहान्महात्मनः।
अहो प्रतिनिवर्तन्ते तस्य श्रीः सातिवर्धते॥
प्रतिनित्यं विशेषेण चन्द्रमा इव शुक्रके।
तदेव जन्म तस्यास्य भव्यं भाग्यं च तादृशम्॥
शाखाचंक्रमणेनालं प्रशस्तं प्रकृतं हि, तत्॥

## ब्राह्मण्यप्रशंसा

बहूक्त्वा किं तादृशं हि ब्राह्मण्यं वेदसंमितम्। देववन्द्यमतिश्लाघ्यं पावनंपावकं महत्॥
संपन्निदानं कल्याणकारकं पापवारकम्। आपद्वृन्दादिशमनं चिन्तितार्थप्रदायकम्॥
तस्य दर्शनमात्रेण नरः पापात्प्रमुच्यते। आधिव्याधिप्रशमनं कालमृत्युहरं परम्॥
श्वाश्रेयश्रीकारकं भव्यमूलकं चिन्तितार्थदम्। सर्वतीर्थैकरूपं तत्सर्वयज्ञफलप्रदम्॥
तद्वाक्यजलमात्रेण सर्वपापानि देहिनः। प्रनष्टानि भवन्त्येव हीनवर्णोऽपि जायते॥
महावर्णः सद्य एव यद्यनुग्राहका द्विजाः। तेऽनुग्रहैककर्तारः नश्शाखिनोऽपि वा॥

सप्त पञ्च त्रयो वापि यदि स्युः श्रोत्रियाः शिवाः।
वेदाध्ययनहीनाश्चेच्छाखाध्यायिन एव वा॥
पूर्वोक्तसंख्याकाः स्युश्चेदपात्रोऽप्यत्र पात्रताम्।
इयादेवाविलम्बेन नात्र कार्या विचारणा॥

यत्र त्रयो वा लब्धाः स्युः श्रोत्रियास्तत्र केवलम् ।
परिषत्त्वं महत्प्राप्तं केवलं भवति ध्रुवम् ॥
ब्रह्मविष्णुमहेशानां इन्द्रादीनां दिवौकसाम् ।
त्रयस्त्रिंशत्कोटिसंख्याकानां सुमहतामपि ॥
सान्निध्यमपि तत्रैव भवेदेव न संशयः ।
गङ्गादीनां च सर्वासां नदीनां पुण्यपाथसाम् ॥
सप्तानां शतसंख्यानां सर्वपापविरोधिनाम् ।
षट्कोटिकोटितीर्थानां वेदानां चापि कृत्स्नशः ॥
समुद्राणां च सर्वेषां श्रोत्रिया यत्र वा त्रयः ।
सान्निध्यं तत्र भवति परिषत्त्वं च तत्र हि ॥
यत्राश्रोत्रियसाहस्रं दशसाहस्रमेव वा । परिषत्त्वं न तत्रास्ति तदानुग्रहकत्वकम् ॥
न प्राप्नोत्येव नितरां श्रोत्रियत्वं च केवलम् ।
शाखाध्ययनतः स्याद्धि तादृग्विप्रो महानति ॥
तदर्थज्ञो यदि पुनः साक्षादीश्वर एव नः ॥

## शाखाध्ययनहीनानां निन्दा

विना तु शाखाध्ययनं ये सभायां महाजडाः । परिषत्त्वं प्रकुर्वन्ति न तत्त्वं पतिपद्यते ॥
अनुग्रहो यत्कृतस्तै र्न स तत्फलदायकः । तूष्णीको ह्यकृतप्रायः व्यर्थ एव भवेच्च सः ॥
मन्त्रैकपूतं तत्कर्म मन्त्रा वेदैकवर्तिनः । तत्तत्क्रियासाधनाय ते मन्त्राः स्युरपेक्षिताः ॥
तस्मात्स्वाधीनमन्त्रा ये ब्राह्मणाः श्रोत्रिया इति ।
प्रसिद्धाः सर्वकृत्येषु प्रशस्ताः स्युरनुग्रहे ॥
वेदाध्ययनसंस्कारजन्यसंस्कृतभाषया । यथोच्यते तथैव स्यात्तेन ते स्युरनुग्रहे ॥
निरपेक्षककर्त्तारः कर्तुं चाकर्तुमेव च । अन्यथाकर्तुमपि च शक्ताः स्युः सन्ततं हि ते ॥
यथा चित्रप्रलिखिताः मर्त्यदेवसुरद्विषः । गजगोवाजिभुजगमृगहर्यृक्षवानराः ॥

स्वकार्यकरणाशक्ताः तथा वेदविवर्जिताः । अनुग्रहकराः प्रोक्ताः महद्भिर्ब्रह्मवादिभिः ॥

यदि मौढ्येन ते तूष्णीं श्रोत्रियान्तर्गताः खलाः ।
परिषत्स्वपि तिष्ठन्तस्तथास्त्विति वदन्ति चेत् ॥
जिह्वायां तु तदीयायां प्रोतयित्वा खरं तु तत् ।
शूलं दूताः कालसूत्रे याम्यास्तं ताडयन्त्यति ॥
तत्कर्म च तथैव स्याद्यथाप्रोक्तं पुरा किल ।
तस्मात्तु कर्मसाद्गुण्यहेतवे वैदिकान् शुचीन् ॥
ज्ञात्वा परिषदः कुर्यादन्यथा नाशमेति तत् ।
तत्कर्मापि प्रनष्टं स्यात् परिषत्त्वस्य तस्य च ॥

## सभ्यलक्षणम्

विधायका महान्तःस्युर्वेदशास्त्रार्थवेदिनः । धर्माधर्मैकनिपुणाः कृत्याकृत्यविशेषगाः ॥
पुण्यपापातिभीताश्च दयादाक्षिण्यतत्पराः । पौर्वापर्यविशेषज्ञा देशकालानुगुण्यतः ॥
प्रवाचनैकनिपुणाः तथा प्रवचनेऽपि च । त्रय एव हि ते प्रोक्ताः ह्रीश्रीभीपुत्रसंयुताः ॥

निधयः सर्वविद्यानां सुमुखाः सुलभाः ,परम् ।
एतेभ्योऽप्यधिको ज्ञेयः सौजन्यश्रीनिकेतनः ॥
अत्यन्तदाक्षिण्यपरः कल्पनीयोऽनुवादकः ॥

## अनुवादकलक्षणम्-अनुवादककृत्यम्

अनुवादककृत्यं तदत्यन्ताशक्यमुच्यते । आदौ ज्ञेया गृहपतेर्वयः कर्म धृतिर्मतिः ॥
कृतं च क्रियमाणं च चरित्रं चेष्टितं च तत् । बलाबले शक्तिभाग्यसामर्थ्यनियमादयः ॥
अनुवादकसंज्ञेन सम्यगेतेर्खिला अपि । विज्ञेयाः स्युः पुनरपि तेषां परिषदामपि ॥

मानसं तच्चरित्रं च तद्वाक्यानि पृथक् पृथक् ।
तथाविधायकानां च कार्याकार्यादिकं पुनः ॥

उक्तिप्रत्युक्तिवाक्यानि सर्वेषामपिकृत्स्नशः । अनुवादपुरोवादपश्चाद्वावादिकानपि ॥

कृत्स्नान् शास्त्रमहामार्गान्वितथेनैवतान् स्वयम् । अनूद्य वेदमार्गेण त्रिवारं सम्यगेव वै
तथोर्ध्वबाहुर्निष्कर्षं तस्योद्धरणहेतवे । अन्यूनानतिरिक्तेन प्रकुर्यादिति सा श्रुतिः ॥
तत्रादौ शास्त्रवृ(दृ)ष्टानि यजमानस्य केवलम् । सभाभ्यनुज्ञा प्रथमोऽभ्यनुज्ञा स्वकृतिस्ततः
परिषद्दक्षिणापश्चाद्दशस्नानानि तानि वै । मृदादीन्यदि शुद्ध्यैकहेतूनि प्रवराण्यति ॥
पावनानि प्रशस्तानि महर्षिगदितान्यपि । संकल्पश्चापि वरणं त्रयाणां च पृथक् पृथक् ॥
सर्वेषामपि भूयश्च तत्तत्कृत्यानुरूपतः । अन्तरा ब्राह्मणं कृत्वा नान्दीं पुण्याहपूर्वतः ॥
कृत्वैव च विधानेन प्राच्याङ्गं च ततश्चरेत् । तथैव वैष्णवश्राद्धं शालाहोमश्च पूवकः ॥
विज्ञापनाप्रकारश्च वचनं वाचनं तथा । अनुवादकवाक्यैकप्राधान्येनैव केवलम् ॥
विधायकानां वाक्यानि पर्यालोचनयैव हि । शास्त्राणामपि सर्वेषां पश्चात्परिषदामपि
परस्परैकवाक्यानि सर्वेषामेकवाक्यतः । निश्चयेन ततःपश्चादेकैकत्वेन तत्परम् ॥
यजमानमुखं दृष्ट्वा त्वं वदेति ततः पुनः । वाक्यं परिषदां श्रीमद्वचनं तेन तत्परम् ॥
अनुवादकवाक्यं च तत्तच्छत्त्यनुसारतः । कृच्छ्रानुष्ठानतस्तस्य परा सा कृतकृत्यता ॥

जाता तवेति य ( त् ) प्रोक्तिः शालाहोमस्ततः पुनः ।
उत्तराख्यश्च परमो गोदानं दक्षिणादिना ॥

उदीच्यनामकं दिव्यं तच्छ्राद्धं च ततः परम् । भोजनं ब्राह्मणानां च भूरिदानं विशेषतः
दशदानानि पुण्यानि सर्वपापेभ्य एव च । मुक्त्यैभूयासमित्येव यजमानस्य चिन्तनम् ॥
सर्वं तदेतत्तरणोपायाः मर्त्यस्य देहिनः । प्राणिमात्रस्योपदिष्टाः सर्वे विप्रमुखेन वै ॥
सर्वपापोत्तारणस्य ब्राह्मणा एव वेदिनः । उपायाः कथिता वेदशास्त्रकल्पादिभिर्दृढम् ॥
विना विप्रमुखं कर्म न किञ्चिदपि विद्यते । कर्ममात्रे ब्राह्मणो वै साक्षीसर्वस्य वैधतः ॥
ब्राह्मण (स्य कृतं) पूर्वं ब्रह्मणा वेधसा तथा । ब्रह्मणा रहितं कर्म तस्मात्कर्तुं न शक्यते ॥
ब्राह्मणानां तद्धनस्य निक्षिप्तस्य स्वशक्तितः । विभागः शास्त्ररचितः इत्येव श्रुतिसूत्रतः ॥

पादः परिषदं गच्छेत्पादो गच्छेद्विधायकान् ।
पादोऽनुवादकं गच्छेत्पादं कृच्छ्रेषु विन्यसेत् ॥

एवं यो ब्रह्ममुखतः प्रायश्चित्तं करोति वै । तरत्येवाशु तस्मात्तु कृतकृत्यो भवेदपि ॥

सर्वेभ्यश्चापि पापेभ्यः सकाशाद् ब्राह्मणो महान्। तारयेदवशान्नूनं वेदविच्छास्त्रपारगः

## ब्राह्मणस्योत्तमत्वे मनुनारदाद्युक्तश्लोकोदाहरणम्

अत्रेदं मनुना गीतं वचनं श्रुतिरूपकम्।
यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः॥

कव्यानि चैव पितरः किंभूतमधिकं ततः। नारदेनात्र कथितःश्लोककश्च न तारकः॥
एक एवात्र निपुणः पाप्युद्धरणकर्मणि। उपायेनैव लघना वाक्यमात्रेण बाडबः॥
पुरा प्रोवाच भगवान् नन्दिश्लोकं पुरोदितम्। शंभुना देवदेवेन गौर्यै स्कन्दाय तत्वतः॥
अस्मिन्नर्थे सर्वदेवपुरतः कारणेन वै। तं वो निरूपयिष्यामि तज्ज्ञप्त्यै शृणुताधुना।
दैवतानि न तीर्थानि क्षेत्रकृच्छ्रतपांसि च। तुलितानि ब्राह्मणेन भवेयुर्वेदिना सता॥

यथाकथंचित्पूज्यः स्यात्सर्वकर्मसु सन्ततम्।
अब्राह्मणो ब्राह्मणोऽपि त्वपात्रं पात्रमेव वै॥
नामधारकमात्रो वा तथैव ब्राह्मणब्रुवः॥

## श्रोत्रियाश्रोत्रियादितारतम्यम्

श्रोत्रियो वेदतत्त्वज्ञो वेदपारग इत्यपि। ब्राह्मणानां तारतम्ये कथितं ब्रह्मवित्तमैः॥
ब्रह्मवीर्यसमुत्पन्नो मंत्रसंस्कारवर्जितः। जातिमात्रोपजीवी च ह्यसावब्राह्मणः स्मृतः॥

विवाहितायां ब्राह्मण्यां ब्राह्मणाज्जनितो यदि।
मन्त्राभासक्रियामात्रो ब्राह्मणःस्यात् क्रियाक्षमः॥

सज्जन्मतः क्रियालोपादपात्रमिति कथ्यते। सज्जन्मतस्सत्क्रियया पात्रमित्युच्यते बुधैः॥

सज्जन्मतोऽसत्क्रियया नित्यकर्मादिशून्यतः।
जातिमात्रोपजीवी यः स प्रोक्तो ब्राह्मणब्रुवः॥
सज्जन्मनासंस्कृतः सर्वैः नित्यकर्मादिकृत्स्वयम्।
शाखामात्राध्यायी च श्रोत्रियः कथितोऽखिलैः॥

वेदशास्त्रादितत्त्वज्ञः सर्वसंस्कारसंस्कृतः। ब्रह्मविद्ब्राह्मणो योगी वेदपारग उच्यते॥

प्रोक्तेषु सर्वेष्वेतेषु श्रोत्रियो वेदतत्त्ववित्। उत्तमात्युत्तमौ ज्ञेयौ पावकौ पङ्क्तिपावनौ॥
परदारपरान्नाभ्यां प्रतिग्रहविशेषतः। दुष्क्रियाभिर्ब्राह्मणत्वं हैन्यमेव प्रपद्यते॥
परान्नेन मुखं दग्धं हस्तौ दग्धौ प्रतिग्रहात्।
परस्त्रीचिन्तया चित्तं ब्राह्मणस्य निरन्तरम्॥
एतद्दुष्टस्य चेद्देवं भविष्यति हि केवलम्। महात्मनो वैपरीत्यं ब्राह्मणस्य विजानतः॥
वेदप्रवचनादास्यं कार्तार्थ्यं प्रतिपद्यते। नित्यकर्मवशौ हस्तौ मानसं ब्रह्मचिन्तनात्॥
सर्ववेदधरो विप्रो यदि शूद्रान्नतत्परः॥

## शूद्रान्नप्रतिग्रहीतृनिन्दा

सद्यः पातित्यमाप्नोति तदन्नं तत्परित्यजेत्।
आहिताग्निः सदापात्रं सदापात्रं तु वेदवित्॥
पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे। आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमेव तत्॥
शूद्रावामं कदाचिद्वा न गृह्णीयात् ततस्तराम्। विशिष्य तत्पितृश्राद्धे तेन दत्तं सुचेतसा॥
तदुद्देशेन मूढात्मा प्रतिगृह्य दुराशया। मलिनीकरणात्पापान्मालिन्यं प्रतिपद्य वै॥
विप्रत्वस्य स्वनिष्ठस्य स्वीयजातिच्युतो भवेत्॥

## तत्प्रायश्चित्तम्

तद्दोषपरिहाराय ब्रह्मकूर्चविधानतः। तपःकृच्छ्रं पुरा कृत्वा पक्षयावकभोजनः॥
चतुर्विंशतिसाहस्रगायत्रीजपतस्ततः। द्वादशब्राह्मणानां च भोजनेन ततः पुनः॥
गां दद्यादिति सर्वाणि गर्जन्ति जगतीतले।
विविधान्यपि शास्त्राणि सौ(स)कृदेव कृतस्य वै॥
एवमाद्वादशादुक्तं तदूर्ध्वं परितो ध्रुवम्। शूद्रान्नजीवी न भवेत्प्राणैः कण्ठगतैरपि।
शूद्रान्नशूद्रसंपर्कान्मासमात्रेण बाडबम्। शूद्रीकृत्यावशात्पश्चाच्चण्डालत्वं करिष्यतः॥
एकस्य शूद्रमात्रस्य पौरोहित्यं द्विजाधमः॥

## रजकादिभ्यः प्रतिग्रहफलम्

एकस्य शूद्रमात्रस्य पौरोहित्यं द्विजाधमः । संपाद्य पक्षमात्रेण रजकत्वं प्रपद्यते ॥
रजकस्य तथा तत्त्वं संप्राप्यैव दिनत्रयम् । दाश(स)त्वं समवाप्नोति तस्य तन्मासतो यदि
संप्राप्तश्चेद्द्विजो मूढः सूनत्वं प्रतिपद्यते । तस्य मासेन तत्कृत्यात्पौरोहित्या(रव्यकर्मणा)
तिलघातकजातित्वं लभते ब्राह्मणाधमः । तिलघातकपौरोहित्येन मासे न ह्याद्विजः॥

सुराकृत्वमवाप्नोति मासतानूनमत्र वः ॥

## रजकदाशतिलधातुकादिभ्यः प्रतिग्रहप्रायश्चितम्

प्रवच्मि चैषां सौलभ्यान्निष्कृतिं शास्त्रचोदिताम् ।
चापाग्रयानं कृत्वादौ तत्सर्वं स्नान ततः ॥

कृत्वा यथावत्तत्रैव पुनः स मादितः (।) । लब्ध्वा विप्रमुखात्पश्चाद्दत्वागोत्रयमेव च ॥
यथाशक्ति ब्राह्मणानां भोजनं च सपर्यया । कृत्वा तदंहसामुक्तः पुनर्ब्राह्मण्यमश्नुते ॥

## भिल्लनीचकिरातपुलिन्दादिपौरोहित्याश्रयणप्रायश्चितम्

भिल्लानां चकिरातानां पुलिन्दानां प्रहारिणाम् ।
यवनानां च हूणानां पर्पराणां दुरात्मनाम् ॥
पौरोहित्याश्रयाभ्यां च गृहचर्यादिबोधनात् ।
नक्षत्रतिथिवाराणामुक्त्या तत्पापशान्तये ॥
मन्त्रतन्त्रजपादीनां करणे न च केवलम् ।
सद्यो वैक्लव्यमासाद्य न्यूनतां जातिहैन्यताम् ॥
सद्भ्यो महद्भ्यो ज्ञानिभ्यो न्यङ्गनैच्येतिनिन्दिते ।

पराभूतिं च तुच्छत्वं सर्वाभाषणतामपि । सर्वेषामस्मृतित्वं च संप्राप्यैव च तत्पुनः ॥
चण्डालतुलितः पश्चात्तेषु चापि निकृष्टतः । तुच्छजातिर्भवेदेव नात्र कार्या विचारणा ॥

तस्यैतस्यापि वक्ष्यामि दुष्कृत्यस्यातिपावनीम् ।
निष्कृतिं शास्त्रविहितां परिषत्पूर्वमेव वै ॥

सन्ततं यावकाहारो मार्गमध्येतितापतः ।
धनुष्कोटौ विधानेन स्नास्यान्मासत्रयं शुचिः ।।
कालत्रयेऽपि नितरामघमर्षणमन्त्रकैः । जले निमग्नो नियतो द्रुपदामपि पावनीम् ।।
दशप्रणवगायत्रीं प्राणायामविधानतः । वायोर्निरोधनं कुर्वन् स्वकृत्यं चापि संस्मरन् ।।
कालं नयेद्यथाशास्त्रं पुनः संस्कारकर्मणा । गोपञ्चकप्रदानेन शक्त्या ब्राह्मणभोजनात् ।।
शुद्धो भवेदन्यथाऽसौ पूर्वां गतिमवाप्नुयात् ।।

## स्वर्णकाररथकारादिपौरोहित्यनिषेधः

स्वर्णकारस्य तुच्छस्य रथकारस्यास्य पापिनः ।
सूतस्यायस्करस्यापि पौरोहित्याच्छताधिकम् ।।
दिवाकीर्त्यस्याघमूर्तेः पौरोहित्यं तु दुष्करम् । तन्मन्दिरप्रवेशेन तत्प्रतिग्रहकाम्यया ।।
कीर्तिर्यशोलक्ष्मीः श्रीः शोभा सौम्यता परा ।
भगो दाक्ष्यः सहश्चैव बलमोजो धृतिर्दमः ।।
तत्क्षणाद्विलयं यान्ति वैरूप्यमपि जायते ।
रात्रौ तत्स्मरणान्नूनं अश्र्यलक्ष्म्याग्रहेऽस्य सः ।।
स्यातां प्रविष्टौ सुतरां तस्मात्तत्कीर्तनं दिवा । कर्तव्यं हि प्रयत्नेन तत्कृत्यमपि केवलम् ।।
क्षुरकर्म च नोच्चार्यं स्मरणीयं यतो नतु । तादृशस्यातिपापस्य पौरोहित्यं द्विजाधमः ।।
करोति यो वा मौढ्येन तस्यैते नरकास्थिताः ।
ये लोके कालसूत्रादिनामका यमलोकके ।।
नालं ते निखिलेनैव संग्रहेण वदामि वः ।
बहूक्त्वा (क्त्या)किं महाभागा ग्राह्यो वाच्योऽपि नैव सः ।।
किंतु नित्यं स पापी तु प्रेक्षणीयोऽपि नैव तु ।
यदि दृष्टः स मूढात्मा कदाचिदवशादपि ।।
सद्यः सूर्यविलोकःस्यात् पुण्डरीकाक्षमेव च ।
स्मृत्वा च द्रुपदां दुर्गां शचीं लक्ष्मीमुमां तथा ।।

दशप्रणवगायत्रीं जपेदपि सकृच्छिवाम् ।
नक्षत्रजीवी लोकेऽस्मिन् निन्द्यो भवति केवलम् ॥
न भवेदेव नितरां देशग्रामपुरोहितः । सर्वजातियुतग्रामपौरोहित्येन केवलम् ॥
संकरोऽयं भवेन्नूनं तस्मात्तत्संपरित्यजेत् । षोडशग्रामचण्डालपौरोहित्येन तत्क्षणम् ॥
तत्तज्जातीयपापानामालयोऽयं न संशयः ॥

## वेश्याराजादिपौरोहित्यनिषेधः

सर्वप्राणेन नितरां वेश्यावीथीपुरोहितः । न भवेदेव कामेन तस्य चित्तं तु दुस्तरम् ॥
अत्यन्तनिन्दितं राजपौरोहित्यं महात्मभिः । तदेकदिनमात्रेण धनाधोगतिदा सदा ॥
पौरोहित्येन नितरां करदीपिकजीविनाम् ।
ज्ञातजन्मस्वयं नूनं ज्वालाभास्वत्पिशाचताम् ॥
संप्राप्य पश्चाद्दुःखेन खद्योतत्वं प्रपद्यते । गुरुवारेष्वसंभाष्यो गोपालानां पुरोहितः ॥
भौमवारेष्वसंभाष्यो मत्स्यघातिपुरोहितः । त्रियामासु न संभाष्यो ग्रामपालपुरोहितः॥
भानुवारेष्वसंभाष्यो चित्रकारपुरोहितः । स्थिरवारेष्वसंभाष्यः शस्त्रधावपुरोहितः ॥
इन्दुवारात्प्रेक्षणीयः शबराणां पुरोहितः । सौम्यवारेष्वसंभाष्यो यवनानां पुरोहितः ॥
सर्वेषां रथकाराणामम्बष्ठानां च शिल्पिनाम् । सौचिकानां तुन्नवायरजकानां पुरोहितः
बुधवारे न प्रशस्ता भाषणादिषु कर्मसु । पौर्णमासीष्वमास्वेवं चर्मकारपुरोहितः ॥
संल्लापादिष्वयोग्योऽयं किं वा संभावनादिषु । सूततक्षकमाहिष्यमण्डहारकजीविनः ॥
पौरोहित्येन ये ते वै संक्रान्तिष्वेव केवलम् । न संभाष्यो विशेषेण न प्रष्टव्याश्च रात्रिषु
शुक्रवारेषु सर्वेषु करदीपोपजीविनः । न दर्शनीया यत्नेन परं सायात्तु तेषु वै ॥
प्रतिष्ठति श्रीर्यत्नेन तस्मात्ते तदनन्तरम् । सदा भव्येषु पुण्येषु कल्याणेषु विशेषतः ॥
उ ( त्तमे ? ) षु च सर्वेषु प्रेक्षणीया दिवा न तु ।
अहस्स्वलक्ष्मीस्तेषु स्याल्लक्ष्मीस्सायं स्थिरा भृशम् ॥
तस्मात्तु दर्शनं तेषां सायंकाले विशिष्यते । सर्वपैतृकवारेषु शिबिकावाहनक्षमाः ॥

न द्रष्टव्या न संभाष्याः कल्याणेषु विशेषतः । दर्शनं प्रवरं तेषां बन्धूनामागमेषु च ॥
मौञ्जीविवाहसीमन्तपुण्यशूलगवादिषु । नितरां न प्रवेष्टव्यः बुरूडानां पुरोहितः ॥
मृतकाशौचकालेषु तन्तुवायपुरोहितः । न संभाष्यो विशेषेण प्रेक्षणीयोऽपि नैव तु ॥
वस्त्रस्वीकारकालेषु शुभकार्याय केवलम् । अत्यन्तावश्यकोऽयं स्यात् तन्तुवायपुरोहितः ॥
ते तीर्थजीविनो नित्यं तिष्ठन्तस्तत्र भूरिशः । सर्वजातीयसंघातधनग्रहणलोलुपाः ॥
वर्ज्यावर्ज्यैकराहित्यमानसा दुष्टचेतसः ॥

## शूद्रार्थमानीतपवित्रपाणिब्राह्मणस्यहव्यकव्यादिनिषेधः

शूद्रार्थानीतसद्दर्भपवित्रधृतमुष्टयः । अत्यन्तनिन्दिताः पापाः न योग्या हव्यकव्ययोः
वाङ्मात्रेणापि नार्च्याः स्युर्नवन्द्या करसंपुटात् ।
वेदशास्त्ररतास्तेऽपि न पङ्क्त्यर्हाः कदाचन ॥
पुण्यक्षेत्रकृतावासाः तादृङ्निन्दितकर्मणाम् ।
करणाद्दूषिता एव भवेयुर्ब्राह्मणा अपि ॥
पुण्यक्षेत्रकृतावासान् स्वकर्मनिरतानपि । तत्क्षुद्रशूद्रतत्तीर्थप्रतिग्रहमहाविलम् ॥
च्युतित्वं विप्रतस्सद्यः कारयत्यतिसत्वरम् । प्रतिग्रहरता विप्रा पुण्यतीर्थतटेष्वति ॥
वयमेवात्र कृत्स्नानां दानानां ग्राहका इति ।
वदन्तः सततं क्रौर्यप्रोक्तिपूर्वंचवि च विकाः (वचांसि च) ॥
त एव कीर्तिता ( नित्यं ? ) पापिनो ब्रह्मराक्षसाः ॥

## प्रेतान्नभोक्तृनिन्दा

एतत्समाः प्रेतभुक्तिपरा अपि न संशयः । त्रिभुक्तितष्षोडशस्य नग्नप्रच्छादनस्य च ॥
नवश्राद्धे कुटुम्बस्य श्राद्धे भुक्त्यष्टतस्तथा । एकाहनामकश्राद्धे सक्तुतत्प्राशनस्य च ॥
तथास्थिपायसस्यापि ब्राह्मण्यं नष्टमेव हि । पुनरुद्धरणं नास्य तन्नष्टं नष्टमेव हि ॥
दुष्कर्मनष्टब्राह्मण्यः ख्यातोऽयं नित्यसूतकी । न संस्पृश्यो विवाहादिशुभकर्मसु सन्ततम्

न प्रवेश्यो न पूज्यश्च न संस्पृश्यश्च सर्वथा ।
तद्भक्षितान्नपुलकसंख्याजन्म स्वयं पुनः ॥
बालरण्डा भवेन्नूनं तस्मादेनं निरन्तरम् । चित्यग्निदग्धोल्कातुल्यं न पश्येच्छुभकर्मसु ॥
यद्ययं देहसंस्पृष्टः कदाचिदवशादपि । स्पृष्टस्थालं जलेनैव संप्रक्षाल्य करेण वै ।
स्वकर्णं दक्षिणं दृष्ट्वा नासिकान्तं च तारतः ।
त्रिवारं व्याहृतिश्चापि जपित्वैवं पुनस्ततः ॥
इदं विष्णुं जपेच्चापि नासौ नोचेद्भवेद(दि)ति । दौर्भाग्यप्रथमं पात्रं शरणं निखिलागसाम्
त एते ये ( ? ) प्रोक्ताः निखिलेनासतोद्य वै ।
न योग्यास्सर्वकार्याणामित्येवेति सुनिश्चयात् ॥
न हव्येषु न कव्येषु शान्तिपौष्टिककर्मसु । लौकिकाघविशेषेषु पुण्यवैदिककर्मसु ॥
स्वबुध्या नाह्वयेन्नित्यं नापि संभावयेदपि । यद्यागताः स्वयं ते तु पुरस्कार्या न चैव हि ॥
न गौरवं प्रकुर्वीत ताटस्थ्यं तत्र चाश्रयेत् । तत्कृतं चोपकारं वा नाङ्गीकुर्याद्विशेषतः ॥
कथञ्चन विशेषेण परिषत्सु न योजयेत् । विधायकेषु वा नूनं मृत्नेक्ष्वपि विचक्षणः ॥
परित्याज्याश्च ते ये स्युः सन्ततं ग्रामयाजकाः ।
तत्प्राधान्यपराः पापाः वृत्त्यन्तरविहीनतः ॥
एतावदेतत्कार्याय समष्टिजनकल्पितः । क्रूरवृत्तिविशेषोऽयं ये वा तज्जीविनो द्विजाः ॥
प्रशस्ता वापि ते सर्वे तानेतान् सर्वकर्मसु ॥

## परित्याज्यब्राह्मणलक्षणम्

परित्यजेद्विशेषेण वेदिनोडा(दा)म्भिकानपि ।
काकवृत्तीन् व्याघ्रवृत्तीन् बकवृत्तीन् दुराशयान् ॥
सुतरां वर्जयित्वैव समीचीनान् सुचेतसः ।
येनकेनापि सन्तुष्टान् सद्वृत्तीन् पुण्यपापयोः ॥
कृतचित्तान् विचारेषु सदाचारपरानपि ।
न यज्ञान् बुद्धिसंपन्नान् सदा दाक्षिण्यसुन्दरान् ॥

सौजन्यनिलयान्शान्तान्स्थाप्यपक्षविवर्जितान् ।
परद्रव्यपरक्षेत्रपरदारपराङ्मुखान् ॥
गृह्णीयात्सर्वकृत्येषु ब्राह्मणान् ब्रह्मवादिनः ॥

## वैश्वदेवकालागतानामनिराकरणम्

यादृशो यः कश्चिदपि वैश्वदेवावसानके ।
क्षुत्तृष्णाभ्यां समायुक्त आगतश्चेत्तदा गृही ॥
शक्तौ सत्यामन्नदानमात्रेण सुतरामयम् । संतर्प्यश्च विशेषेण प्रपाल्यः तिन्मवाक्यतः ॥
तिरस्कार्यो न वाच्यश्च तस्मिन् काले विशेषतः ।
सर्वेऽपि पात्रतां यान्ति भक्तदानाय गेहिनः ॥
विप्रवेषेण सततं तन्तुमात्र प्रधानकः । संप्राप्तपूर्णब्राह्मण्य इत्येव सततं मतिम् ॥
कुर्वन् सुमहदाप्नोति सौभाग्यं ब्राह्मणोत्तमः । अन्नप्रदानकालेषु परेषां विद्विषां द्विषाम् ॥
तेषां चापि समानां तामर्चां कुर्यान्न चान्यथा । शाकसूपप्रदानादिविषये पक्षपाततः ॥
एकपङ्क्त्युपविष्टानां न्यूनाधिक्यं न कारयेत् ॥

## सद्ब्राह्मणानां भिन्नपङ्क्त्युपवेशननिषेधः

करणात्तस्य नितरां पात्रकं सुमहद्भवेत् ।
सदाचारपरान् शान्तान् श्रोत्रियान् ब्राह्मणान् सतः ॥
ज्ञातत्रिपूर्वकान् साधून् तादृशोऽपि स्वयं सदा ।
भुक्तिकाले भिन्न पङ्क्तौ बुद्ध्या नैवोपवेशयेत् ॥
तादृशान् यदि मोहेन ब्राह्मणान् पङ्क्तिपावनान् ।
परित्यज्यान्यतो भुक्तिमात्रेणासौ पतत्यधः ॥
अश(ा)स्त्रीयव्रतमहानियमाभासहेतुना । सद्यो विप्रतिरस्कारकिल्बिषात्पतितोऽभवत् ॥
सत्कर्मविकलस्त्वज्ञः विद्याशौचे पराङ्मुखः ।
दुराचारो ( ? ) तान् तादृशान् ब्रह्मणोत्तमान् ॥

दुराचारकुवर्त्मभ्यां भिन्नपङ्क्त्युपवेशनात् ।
सद्यो भ्रष्टश्च म(प)तितः ब्राह्मण्यात्किल्बिषो भवेत् ॥
मन्त्रार्थो ब्राह्मणमुखाद्विज्ञेयो नान्यवर्त्मना ।
मन्त्राश्च वेदाः सर्वेऽपि विप्रोच्चारणपूर्वकात् ॥
अनूच्चारणतश्चापि स्वस्याधीनाः स्युरेव वै ।
तादृशान् ब्राह्मणान्नूनं त्यजन् भुक्तौ तु पङ्क्तिषु ॥

कथं तरेदयं मूढो गुरून् गुरुसमानपि । वेदमन्त्रैः क्रियाः सर्वाः वेदमन्त्रस्तपःक्रियाः ॥
सर्वक्रिया वेदमन्त्रैस्तस्माद्वेदपरो द्विजः । वेदस्य वेदिनश्चापि न भेद इति गोभिलः ॥
वेदमेव जपेन्नित्यं यथाकालमतन्द्रितः । जपान्तरेण किं तस्य नित्यं वेदजपः परः ॥

गायत्र्या वेदमातुस्तु जपमात्रेण केवलम् ।
ब्राह्मण्यं सुस्थिरं सम्यग्गायत्री तादृशी शिवा ॥
गायन्तं त्रायते यस्मात् गायत्रीत्युच्यते बुधैः ।
न गायत्र्याः परो मन्त्रः सा सर्वश्रुतिमभ्यगा ।
यज्जपेनाखिलजपः सिद्धो भवति सन्ततम् ॥

यज्जपेन विना सर्वः साक्षादीशसमोऽपि वै । द्विजमात्रो निपतति तत्तुल्योऽन्यो मनुर्न हि

तस्मिन्नस्त्राणि सर्वाणि धन्म (धान्या) नि निखिलान्यपि ।
तदर्थचिन्तनं नृणां निदिध्यासनमेव हि ॥
नान्यन्निदिध्यासनं स्यात्तत्स्पष्टीक्रियतेऽद्य वः ।
यो नो धियो बोधयति कुर्विदं कुर्विदं त्विति ॥
तस्मिन्नेतस्मिन् समये उदयास्तमयादिना ।
तार्तीयीकपदस्यार्थस्तत्र स्यात्तु धियः पदम् ॥

द्वितीयावचनं भूरि तद्बहुस्यान्न चेतरत् । न षष्ठि बहु तत्प्रोक्तं वचनं चेति सूरिभिः ॥
प्रचोदयाद् बोधयति तस्य देवस्य तादृशः । सवितुस्तद्वरेण्यं वै वरणीयं विशेषतः ॥

नित्योपास्यमिति ज्ञेयं भर्गो धीमहि कः परः ।
अर्थश्चेदिति संप्रोक्तं सवितुश्चापि तादृशः ॥

नित्योपास्यं तद्भर्गस्तु तेजोऽध्यायी तु इत्यसौ। अर्थप्रकथितः सर्वैर्महद्भिर्ब्रह्मवादिभिः॥
कथं नपुंसकं भर्ग इत्युक्ते तु प्रवच्मि तत्। यशो भर्गः सहश्चेति साहचर्येण तत्तथा॥
भर्गइत्याह सा साध्वी तेज एवेति चोदनात्। सर्वलिंगैः सर्ववाक्यैः सर्वशब्दैरयं विभुः॥
प्रोच्यते खलु तेनात्र गायत्रीति हि फण्यते। तेन स्त्रीलिंगसंप्रोक्ति र्ब्राह्मणो नैव दूषणम्॥
दैवतं देवतादेवः इति लिंगैर्यतः स्मृतः।
गायत्र्याख्यं तु तत्तेजोऽध्यायाम (ध्यायेम) इति वै मनोः॥
तस्यार्थ इति कृत्स्नार्थो निश्चितः सर्ववेदिभिः। एतन्महामन्त्रमात्रोपदेशेनैव बाडवः॥
सर्वाचार्यः सर्वगुरुः कृतार्थश्चापि जायते। तज्जपो विप्रमात्रस्य त्रिसन्ध्यासु दिने दिने॥
दशकान्यूनतत्कार्यः तन्न्यूने स जपो ध्रुवम्। ब्राह्मणत्वस्थापनार्थं जागरूपो भवेन्नतु॥
सहस्रपरमां देवीं शतमध्यां दशावराम्। सन्ध्यां नोपासते ये तु कथं ते ब्राह्मणाःस्मृताः॥
ये सहस्रं जपंत्येनां गायत्रीं ब्राह्मणोत्तमाः। त तेषां श्राद्धभोक्तृत्वहैन्यं तत्स्यात्कदाचन
यथोपदिष्टा गायत्री त्यक्तुं विप्रैर्न शक्यते। कदाचित्सर्वथा तद्वदुपरिष्टास्तदुद्भवाः॥
वेदाद्या निखिलाविद्यात्तदुक्तश्च क्रिया अपि॥

## वेदत्यागनिन्दा

त्यक्तुं तदुल्लङ्घयितुं ब्राह्मणेन न शक्यते। वेदस्वीकरणे त्यागे प्रतिसंवत्सरेऽपि च॥
होमपूर्वं गुरूमुखादुपदेशात्परं श्रुतेः। उपसर्जनतस्तस्या ये वाङ्गत्वेन(मात्रेण)शब्दिताः॥
तेषामप्युपदिष्टत्वान्न संलङ्घ्यो हि सर्वथा। यत एते चोपदिष्टाः गुरुणा वह्निसन्निधौ॥
वेदहोमात्परं प्रत्ययने तैष्यां तथा पुनः। श्रावण्यापि चोत्सर्गोपाकृत्योः प्रतिवत्सरे॥
त्यागश्च ग्रहणं नित्यत्वेनैव प्रतिपादिते। उपदेशःस येषां तेऽन्नुल्लंघ्या महत्तराः॥
तदुक्तान्यपि कर्माणि कर्तव्यान्येव सन्ततम्। उपदिष्टमहामन्त्रत्यागे तु सुमहान् परः॥
प्रत्यवायो दृढतरो द्विजमात्रस्य पेशलः। अत्यन्तपीडाकरणे परं (?) दिने दिने॥
धारणाध्ययनं कार्यं अपूर्वाध्ययनं न तु। तदानीं कर्मकालत्वाद्ब्राह्मणानां महात्मनाम्॥
अपूर्वाध्ययनस्यात्र नित्यं कालो न लभ्यते।
तस्माद्वेदादिसंत्यागस्तदा कार्यो महात्मभिः॥

